सरस्वती श्रुतिमहती न हीयताम्

—:o:—

संस्कृतशिक्षणसमितेः मासिकं मुखपत्रम्

# बालसंस्कृतम्



१ वर्षः

९ अङ्कः

सम्पादकः

कविराजः — वैद्य. रामस्वरूपशास्त्री

आयुर्वेदाचार्यः

## लेखानुक्रमणिका ।

—.o:—



# — पठनीयम् —

# आवश्यकनिवेदनम्

अयि ! बालसंस्कृतस्य भद्राः पाठकाः ! अध्यापकाः, वैद्याः, पुरोहिताः, दैवज्ञाः, कथाव्यासाः, धाराशास्त्रिणः, मंत्रिणः, छात्राः, संस्कृतभ्रातरः, संस्कृता मातरः, संस्कृता भगिन्योऽन्ये च संस्कृत-साहित्यानुरागिणः !

भवन्तो विबुधाः सर्वे इति मे विश्वासः। विबुधाः खलु साधारणाज्जनाद्विशेषं जानन्ति। अथवा संस्कृतज्ञाः सर्वे भवन्तो देवा एव, यथा प्रथमांके एव मया प्रकाशितम्।

संस्कृतं यो न जानाति स वै वैशाखनन्दनः।
यः संस्कृतं तु जानाति स देवो न तु मानुषः॥

अस्तु विबुधशब्दवाच्या भवन्तो देवाः पण्डिता वा स्युः। उभयेऽपि साधारणाज्जनाद्विशेषज्ञा एवेत्यनुक्तमेव ज्ञातुमर्हन्तीति, अनुक्तैरेव बहुभिर्भवद्भिर्बालसंस्कृतस्य शुल्कं प्रहितम्। बालसंस्कृतमिदानीमेकवर्षदेशीयः शिशुरेवेति जानन्ति भवन्तः, शिशवश्च दुग्धं पोषणं चिन्तयनं चार्हन्ति। भवद्भिर्दत्तं शुल्कमस्य संस्कृतशिशोः पोषणम्। यैर्महाशयैर्वार्षिकं शुल्कमद्यावधि न प्रहितम्, तेऽवश्यं त्वरितं च धनादेशद्वारा वी. पी. द्वारा वा दातुं कृपयेयुः। प्राप्ताङ्कानां संख्या, ग्राहकत्वप्रकारस्य स्वीकृतिः, बालसंस्कृतविषयिका समालोचनात्मिका सम्मतिरपि च लेख्या इति प्रार्थयते।

सम्पादकः

बालसंस्कृतम्, लालबावा मन्दिरम्, भोलेश्वरम्, मुम्बापुरी

# SANSKRIT PRABANDH CHANDRIKA

Sanctioned as a supplementary reader for std. IV to VII by
The Bomday University.

No. S-86. (d)-43-C,
Poona, 19 August, 1949.

To

Pandit Ramswarup Shastri, Esquire,
Lalbaw's Haveli, Bhuleshwar, Bombay, 2.

Sir,

I have the honour to state that the book mentioned below was considered by the Provincial School Book Commitee at its meeting held on 2nd August, '49 and sanctioned for the purpose noted against it for a period of 5 years commancing from the date sanction:-

| S. No. | Name of Book | Name of Author | Price per Copy | Purpose for which Sanctioned |
|---|---|---|---|---|
| 1. | Sanskrit Prabandha Chandrika. | Pandit Ramswarup Shastri | Rs. 0-10-0 | Supplementary Reader. |

2. The necessary notification will appear in the Bombay Goverment Gazette in due course.

3. It should be noted that every fresh issue of the book unless it is merely a reprint of the old one requires fresh sanction before it is issued to schools or to school children in this province and the price of the book quality of its printing and binding should not be altered without a reference to this office.

Yours faithfully,
D. K. Jaisinghani
for Director of Public Instruction.
RA

Khd.
4. 2.
Ids/18/8

॥ श्रीः ॥

# बालसंस्कृतम्

पुरे ग्रामे गृहे कुट्यां बाले वृद्धे युवस्वपि ।
संस्कृतस्य प्रचाराय प्रभूयाद्बालसंस्कृतम् ॥

१ वर्षः { मोहमय्यां पौषी पूर्णिमा सं० २००६ } ९ अङ्कः

## सुखाय सा मे भूयात्



कुन्देन्दुगोक्षीरतुषारवर्णा
सरोजहस्ता कमले निषण्णा ।
वागीश्वरी पुस्तकवेणुभूषा
सुखाय सा मे भवतात् प्रसन्ना ॥

# धैर्यम्

धीरस्य भावो धैर्यम्, तन्नाम सत्वशौर्योत्साहसमवायसमन्वितो मानसिको भावः ।

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥

इति धर्मशास्त्रवचने धृतिं धर्मस्य प्रथमं लक्षणमुदाजहार मुनिः । इयं खलु धर्ममन्दिरस्य प्रथमं सोपानम् । अथवा धर्म-मार्गमनुसरता जनेन अवश्यमेव धृतिपाथेयवता भवितव्यम् ।

उक्तश्लोके धृतिशब्देन केचित्संतोषमन्ये च धैर्यमिति व्याचख्युः स्मृतिकाराः, तथापि वयं तु धृत्या धैर्यमेवार्थं युक्तियुक्तं समुचितं च लक्ष्यामहे । क्षमादमाऽस्तेयादीनां सिद्धिमन्तरा तस्य सुदुर्लभत्वापत्तेः । नहि कस्यापि धर्माचरणप्रारम्भसमानकाल एव संतोषोपलब्धिः । स हि परिपाकावस्थाप्रायो धार्मिकत्वस्य । नहि परिणामेऽपि सर्वस्य धार्मिकस्य सन्तोषोपलब्धिदर्शनात्, इति धृतिरत्र धैर्यमेव ।

धैर्यं तु पुनः प्रारब्धेषु कार्येष्वासमाप्तेर्बलवानभिनिवेशः । इदं खलु दृढयति प्रतिज्ञातेषु प्रारब्धेषु वा कार्येषु नरम्, साहयति दुःखद्वन्द्वानि, प्रयच्छत्यात्मबलम्, रक्षति चरित्रम्, सम्पादयति मित्राणि, आनयत्यधिकारम्, प्रापयत्युच्चपदम्, सफलयति कार्याणि, समर्पयति चित्तोत्कर्षम्, ख्यापयति कीर्तिम्, संभावयति च सम्मानम्

धैर्यवन्तो हि सर्वत्र विजयिनो भवन्ति। त एव न्याय्यं मार्गमनुसर्त्तुं प्रभवन्ति । तथाहि--

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥

धैर्यशालिन एव युज्यन्ते तावद्धर्मस्य धुरां वोढुम्, अन्यथा गहनगतेस्तस्य काठिन्येनापि निर्वाहापत्तेः । विषमा भवन्ति खलु धर्ममनुसरतां परीक्षाः, विरला एव धर्मप्राणास्तत्र समुत्तीर्णतामासादयन्ति । आपत्तिस्तु धैर्यस्योत्तमो निकषग्रावा, न तं त्यजन्ति खलूत्तमा जनाः । धृतिमानेव प्रह्लाद इवाग्निपरीक्षया परितपति,ध्रुव इव परित्यजति सर्वस्वम्,भीष्म इव प्रयच्छति परार्थे जीवनम्, युधिष्ठिरः इव सहतेऽपमानम्, द्रौपदीव खलीक्रियते खलैः,हरिश्चन्द्र इव बहिष्क्रियते गृहात्, रन्तिदेव इव क्षुधया प्रपीड्यते, कुमारिल भट्ट इव सजीवमग्निप्रवेशं लभते, शङ्कराचार्य इव कुमार एव परिव्रजति, मीरेव सहर्षं विषमरणं स्वीकरोति,न बिभेति,न शोचति,न ग्लायति न भवति किंकर्तव्यताविमूढः, जायते च सर्वदैव स्मेराननः कार्येष्वूत्साहवान् कर्त्तव्यपरायणो निराकरोति विघ्नसंबाधम् । निर्वहति चासिधाराव्रतमिव धैर्यव्रतम् ।

उद्देश्यवद् भवति जीवितं खलु धीरपुरुषाणाम् "उद्देश्यमन्तरा नमन्दोऽपि प्रवर्तते" इति भणितेः ।

धीरस्तु कार्यार्थी सुखं दुःखं वा न गणयति, लभते चान्ततो गत्वा दुःसाध्यामपि लक्ष्यसिद्धिं सत्यसन्धः । यथोच्यते—

अर्थः सुखं कीर्तिरपीह माभूदनर्थ एवास्तु तथापि धीराः ।
निजप्रतिज्ञामधिरुह्यमाना महोद्यमा कर्म समारभन्ते ॥

धैर्यहीनस्तु कातरः सदैवोद्विग्नमना व्यथितहृदयो मलिनमुखच्छविर्निरुत्साहश्च संजायते मनुजः, न धरति स्थैर्यम्, पश्यति दुःखमूलं विश्वमखिलम्, प्रतिभान्ति भ्रातरो बान्धवा मित्राणि स्वजनाश्च तस्य हतकामस्य वैरिण इव प्रकामम्, महाविपत्तिपर्वताकाराः प्रतीयन्ते क्लेशकणा अपि, न पश्यति स्वप्नेष्वपि कार्येषु सिद्धिम्, सर्वत्रैवासफलो रोदिति, लपति, चिन्तयति, हन्तुमिच्छति च नैराश्येनात्मनाम् । परमधीरस्य तु न कस्यापि पश्चात्तापेन मरणेन वा दुःखान्तः समायाति, यतो यत्र यत्र च जीवात्मा गच्छति तत्र तत्रैवानुगच्छन्ति तस्य सहजातानि कर्मफलानि सुखदुःखेच्छाद्वेषद्वन्द्वानि । इति न कदापि नरेण धैर्यमपहाय निष्फलं नैराश्यमवलम्बनीयम् । येन केनापि विधिना धृतधैर्यो निर्वहेदापतितं दुःखावसरम् । सुदिनानि समेष्यन्तीति समाश्रयेत धैर्यम् । "एति जीवन्तमानन्दो नरं वर्षशतादपि" इति लोकभणितेः । विघ्नानि खलु धैर्यवतां शाणोत्कषणम् । सुखान्यपि दुःखान्यनुभूयैव लभ्यन्ते । यस्तु दुःखस्य कटुतां नानुभवति, कथं नु स आनन्दस्य मधुरिमाणं क्षमते स्वादितुम् । धन्या हि जीवनसौख्यं लभन्ते उत्तमा धीरपुरुषाः । न ते महाविपत्स्वपि मुञ्चन्ति धीरताम् । यथोच्यते—

त्याज्यं न धैर्यं विधुरेऽपि काले
धैर्यात्कदाचिद्गतिमाप्नुयात् सः ।
यथा समुद्रेऽपि च पोतभङ्गे
सांयात्रिको वाञ्छति तर्त्तुमेव ॥

इति सदैवाश्रयध्वं धैर्यम्, त्यजतौदासीन्यम्, कुरुत कर्त्तव्यम्, विश्वसित परमेश्वरे, सदैव प्रसन्नानना भवत, वदत सत्यम्, आचरत धर्मम्, प्रत्येत स्वात्मनो बलम्, मुञ्चत भयम्, परिहरताकर्मण्यताम्, परित्यजत नैर्बल्यम्, समाश्रयत शौर्यम्, साधयत परार्थान्, रक्षत च स्वार्थान् ।

इह खलु पीडिता अपि धैर्यं स्वगुणमत्यजन्तः शूरा हि चिन्वन्ति स्वर्णपुष्पितां पृथिवीम्, साधयन्ति जीवितोद्देश्यम्, लभन्ते च प्रारब्धेषु कार्येषु साफल्यम् । यथोच्यते—

कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा यान्ति कदाचिदेव ॥

---

# अनुग्राहकेषु ग्राहकेषु

अस्माभिरादर्शपुस्तकानि प्राग्लब्धेनार्धमूल्येन प्रदीयन्ते ये सज्जना आदर्शपुस्तकानि कामयेरन् ते कृपया प्रोक्तं मूल्यमादेशेन सहैव प्रेषयेयुरिति निवेदयति—

सम्पादकः

# आम्रम्



चैत्रः- किं नाम इदं फलम् ?

मैत्रः- इदम् आम्रस्य फलम् ।

ननु पक्कं आम्रम् इदम ?

आम् , इदं पक्कम् आम्रम् अस्ति ।

अस्य आम्रस्य कः वर्णः ?

अस्य आम्रस्य पीतः वर्णः ।

किं हरितानि अपि भवन्ति आम्राणि ?

अपक्कानि तानि हरितानि भवन्ति ।

किं रक्तानि अपि भवन्ति आम्राणि ?

आम् , पक्कानि तानि रक्तान्यपि भवन्ति ।

ननु कस्माज् जायन्ते आम्राणि ?

आम्रवृक्षेभ्यः आम्राणि जायन्ते ।

ननु क भवन्ति आम्रवृक्षाः ?

आम्रवृक्षाः उपवनेषु भवन्ति ।

कदा फलन्ति आम्रवृक्षाः ?

आम्रवृक्षाः वसन्ते फलन्ति ।

कदा आम्राणि परिपाकं प्रयान्ति ?

ज्येष्ठाषाढयोः तानि परिपाकं प्रयान्ति ।

अपि तुभ्यम् आम्राणि रोचन्ते ?

आम् , भृशं रोचन्ते आम्राणि मह्यम् ।

गृहाण, इदं पक्वम् आम्रफलम् ।

अहो ! अस्य कोमलः सुखस्पर्शः ।

ननु कीदृशः भवति आम्रस्य रसः ?

आम्ररसः मधुरः सुगन्धश्च भवति ।

चूषतु भवान्, इदम् आम्रफलम् ?

चूषामि, अहो ! अस्य सुरभि माधुर्यम् ।

किं भवति आमेभ्यः आम्रेभ्यः ?

आमेभ्यः तेभ्यः संधानकं जायते ।

कश्च पक्वानां तेषाम् उपयोगः ?

पक्वेभ्यः तेभ्यः आम्ररसः क्रियते ।

अपि के गुणाः पक्वानाम् आम्राणाम् ?

तानि मधुराणि स्वादूनि दीपनानि पाचनानि रुचिकराणि च भवन्ति ।

आम्रं तु मधुरं पक्वं वृष्यं हृद्यं बलप्रदम् ।
गुरु वातहरं रुच्यं वर्ण्यं शीतमपित्तलम् ॥

# अजा

अजा अपि दुग्धदा जातिः। अस्या सखुराः चत्वारः पादाः भवन्ति। अस्याः शरीरं मृदुभिः रोमभिः शोभते। अस्याः मुखम् आयतं सरलं च, मृदुलौ लम्बमानौ च कर्णौ, क्षुद्रं विषाणयुगलम्, लघु लांगूलं च प्रकृत्या शोभन्ते।

अजाः पृथिव्यां सर्वत्र लभ्यन्ते, तथापि देशान्तरेषु अन्तरः संजायते स्वरूपेषु आकारेषु च एतासाम्। पर्वतीयाः अजाः दीर्घाकृतयः लम्बकेशराः च भवन्ति। एताः काश्मीर–तिब्बत–अफ्रिका–अमेरिकासु उत्तमजातीयाः भवन्ति।

अजा घासं विविधानि लतापत्राणि सस्यानि वृक्षवल्कलानि नानाशाकभेदान् च भुंक्ते। एषा गौः इव शुष्कं घासं कडंगरम् अपि चर्वति। इयं किंशुकं विहाय निःशेषम् अपि उद्भिज्जातम् अश्नाति। इयम् सरलस्वभावा दीना च भवति। न कदापि कस्यापि हानिं करोति। इयम् अनायासेन एव पामरेण अपि जनेन परिपाल्यते।

एषा एकेन गर्भेण द्वौ त्रीन् वा शावकान् प्रसूते। मनोज्ञाः चञ्चलाः च भवन्ति छागपोताः। शैलशिखरेषु आरोहणम्, लघुभित्तिषु कूर्दनम्, महावरोधेषु तरुषु उत्प्लवनं च एतेभ्यः रोचते। परिपुष्टाः चञ्चलाः च भवन्ति पुंश्छागाः। ते स्वैरम् छागीनां यूथेषु विचरन्ति। तेषां हनौ श्मश्रूणि भवन्ति।



अजा अस्माकं बहूनि कार्याणि साधयति । इयं दुग्धं ददाति । अस्याः दुग्धे उत्कटः गन्धः भवति । तेन उद्वेजिताः बहवः जनाः तत्पातुं न अनुमोदन्ते । अस्याः पयसः यद्यपि नवनीतं घृतं वा प्राचुर्येण न जायते, तथापि रोगिणां शिशूनां च कृते बहूपयोगि भवति इदम् । इदं पौष्टिकम्, पथ्यम्, लघु, त्रिदोषघ्नम्, शीघ्रपाकि च भवति । तद् एतत् पथ्यम् उशान्ति वैद्याः । अनेन औषधानि अनुपीयन्ते, राजयक्ष्मवतां कृते तावद् आजं पयः, मूत्रम्, मांसम्, आवासः च परमहितकराः भवन्ति ।

बहवः जनाः छागानां मांसम् अश्नन्ति । काश्मीरजातानां छागानाम् ऊर्णाभिः महार्घाणि शीतकालोपयोगीनि ऊर्णावस्त्राणि कम्बलानि बहुमूल्यानि आस्तरणानि च क्रियन्ते । नवरात्रेषु दुर्गापूजायां शाक्ताः वराकान् छागान् एव देव्यै बलिम् उपाहरन्ति । एतासां शृङ्गेभ्यः कंकतिकाः गण्डाः अपि निर्मयिन्ते, अस्थिभ्यः क्षुरकाणां खड्गादीनां च वारङ्गाः क्रियन्ते, चर्मणा च विविधानि उपयोगीनि वस्तूनि विरच्यन्ते ।

सर्वथा उपकारिण्यः अजाः अस्माकम् । पालनीयाः दर्शनीयाः च ताः । कृतघ्नाः खलाः निष्करुणाः च ते खलु जनाः, ये पालयित्वा अपि ताः वराकीः देवताभ्यः घ्नन्ति । तादिदमुच्यते—

व्याघ्रं नैव गजं नैव सिंहं नैव च नैव च ।
अजापुत्रं बलिं दद्याद्देवो दुर्बलघातकः ॥

कंकतिकाः = Combs. गण्डाः = Buttens. वारङ्गाः = Handles.

# तृतीयः पाठः

| | | |
|---|---|---|
| बालाः | लताः | फलानि |
| मानवाः | धेनवः | वनानि |
| अस्मि | स्वः | स्मः |
| भवामि | भवावः | भवामः |
| पठामि | पठावः | पठामः |

| | |
|---|---|
| अपि अहं छात्रः अस्मि ? | एवम् , त्वं छात्रः असि । |
| अपि अहं पठामि ? | एवम् , त्वं पठसि । |
| अपि आवां पठावः ? | एवम् , युवां पठथः । |
| अपि वयं पठामः ? | एवम् , यूयं पठथ । |
| अपि बालाः खेलन्ति ? | एवम् , बालाः खेलन्ति । |
| अपि लताः फुल्लन्ति ? | एवम् , लताः फुल्लन्ति । |
| अपि फलानि पतन्ति ? | एवम् , फलानि पतन्ति । |
| अपि भानुः उदेति ? | एवम् , भानुः उदेति । |
| अपि सूदाः पचन्ति ? | एवम् , सूदाः पचन्ति । |
| अपि नृपाः रक्षन्ति ? | एवम् , नृपाः रक्षन्ति । |
| अपि पत्राणि पतन्ति ? | एवम् , पत्राणि पतन्ति । |
| अपि मेघाः वर्षन्ति ? | एवम् , मेघाः वर्षन्ति । |
| अपि छात्राः पठन्ति ? | एवम् , छात्राः पठन्ति । |
| अपि नराः गच्छन्ति ? | एवम् , नराः गच्छन्ति । |
| अपि विधुः प्रकाशते ? | एवम् , विधुः प्रकाशते । |
| अपि कन्यकाः लिखन्ति ? | एवम् , कन्यकाः लिखन्ति । |
| अपि तुरङ्गाः धावन्ति ? | एवम् , तुरङ्गाः धावन्ति । |
| अपि नद्यः वहन्ति ? | एवम् , नद्यः वहन्ति । |

| | |
|---|---|
| अपि वयं पश्यामः ? | एवम्, यूयं पश्यथ। |
| अपि वृक्षाः फलन्ति ? | एवम्, वृक्षाः फलन्ति। |
| अपि गावः चरन्ति ? | एवम्, गावः चरन्ति। |
| अपि पुरुषाः जल्पन्ति ? | एवम्, पुरुषाः जल्पन्ति। |
| अपि लोकाः भणन्ति ? | एवम्, लोकाः भणन्ति। |
| अपि शिष्याः नमन्ति ? | एवम्, शिष्याः नमन्ति। |
| अपि जनाः हसन्ति ? | एवम्, जनाः हसन्ति। |
| अपि खगाः उत्पतन्ति ? | एवम्, खगाः उत्पतन्ति। |
| अपि मृगाः चरन्ति। | एवम्, मृगाः चरन्ति। |
| अपि गजाः स्नान्ति ? | एवम्, गजाः स्नान्ति। |

Note- अस्मिन् पाठेऽध्यापकाः प्रथमाया बहुवचनं वर्तमाने लटः उत्तमं पुरुषं च पाठयेयुश्छात्रान्।

## चतुर्थः पाठः

| | | |
|---|---|---|
| बालम् | लताम् | फलम् |
| मुनिम् | रुचिम् | पयः |
| भविष्यति | भविष्यतः | भविष्यन्ति |
| पठिष्यति | पठिष्यतः | पठिष्यन्ति |
| लिखिष्यति | लिखिष्यतः | लिखिष्यन्ति |

| | |
|---|---|
| अपि शुकः फलं खादिष्यति ? | एवम्, शुकः फलं खादिष्यति। |
| अपि भृत्यः घटं नेष्यति ? | एवम्, भृत्यः घटं नेष्यति। |
| अपि छात्राः संस्कृतं पठिष्यन्ति ? | एवम्, छात्राः संस्कृतं पठिष्यन्ति |

| | |
|---|---|
| अपि सः पाठं पठिष्यति ? | एवम् , सः पाठं पठिष्यति । |
| अपि रामः पत्रं लिखिष्यति ? | एवम् , रामः पत्रं लिखिष्यति । |
| अपि श्यामः गृहं गमिष्यति ? | एवम् , श्यामः गृहं गमिष्यति । |
| अपि भ्रमरः पुष्पं घ्रास्यति ? | एवम् , भ्रमरः पुष्पं घ्रास्यति । |
| अपि पिकः फलं चूषिष्यति ? | एवम् , पिकः फलं चूषिष्यति । |
| अपि मैत्रः पुस्तकमानेष्यति ? | एवम् , मैत्रः पुस्तकमानेष्यति । |
| अपि त्वं संस्कृतं पठिष्यसि ? | एवम् , अहं संस्कृतं पठिष्यामि । |
| अपि भवान् सत्यं वदिष्यति ? | एवम् , अहं सत्यं वदिष्यामि । |
| अपि सूदः ओदनं पक्ष्यति ? | एवम् , सूदः ओदनं पक्ष्यति । |
| अपि वयमुपवनं गमिष्यामः ? | एवम् , यूयमुपवनं गमिष्यथ । |
| अपि ईश्वरः विश्वं रक्षिष्यति ? | एवम् , ईश्वरः विश्वं रक्षिष्यति । |
| अपि रजकः वस्त्राणि धाविष्यति ? | एवम् , रजकः वस्त्राणि धाविष्यति । |
| अपि धीवरः नदं तरिष्यति ? | एवम् , धीवरः नदं तरिष्यति । |
| अपि छात्राः पुष्पाणि चेष्यन्ति ? | एवम् , छात्राः पुष्पाणि चेष्यन्ति । |
| अपि त्वं वाटिकां गमिष्यसि ? | एवम् , अहं वाटिकां गमिष्यामि । |
| ननु भृत्यः जलं भरिष्यति ? | एवम् , भृत्यः जलं भरिष्यति । |
| अपि कृषकः खनित्रेण खनिष्यति ? | एवम् , स खनित्रेण खनिष्यति । |
| अपि अहं संभाषां पठिष्यामि ? | एवम् , भवान् संभाषां पठिष्यति । |
| अपि मुकुन्दः पत्रं लिखिष्यति ? | एवम् , मुकुन्दः पत्रं लिखिष्यति । |
| अपि अश्वः क्रोशं धाविष्यति ? | एवम् , अश्वः क्रोशं धाविष्यति । |
| अपि गौः घासं खादिष्यति ? | एवम् , गौः घासं खादिष्यति । |
| अपि छात्रः संस्कृतं पठिष्यति ? | एवम् , छात्रः संस्कृतं पठिष्यति । |

Note- अस्मिन् पाठेऽध्यापका द्वितीयाया एकवचनं भविष्यति लृटः प्रथमपुरुषैकवचनं च पाठयेयुः ।

# पञ्चमः पाठः

| | | |
|---|---|---|
| बालौ | लते | फले |
| सुधियौ | नद्यौ | पुस्तके |
| भविष्यसि | भविष्यथः | भविष्यथ |
| पठिष्यसि | पठिष्यथः | पठिष्यथ |
| गास्यसि | गास्यथः | गास्यथ |

अपि त्वं काव्यं पठिष्यसि ? एवम्, अहं काव्यं पठिष्यामि।
अपि सः गीतं गास्यति ? एवम्, सः गीतं गास्यति।
अपि भृत्यः बालौ आनेष्यति ? एवम्, भृत्यः बालौ आनेष्यति।
अपि छात्रौ लते आरोक्ष्यतः ? एवम्, छात्रौ लते आरोक्ष्यतः।
अपि युवां फले खादिष्यथः ? एवम्, आवां फले खादिष्यावः।
अपि माता पुत्रौ रक्षिष्यति ? एवम्, माता पुत्रौ रक्षिष्यति ?
अपि गुरुः शिष्यौ पाठयिष्यति ? एवम्, गुरुः शिष्यौ पाठयिष्यति।
अपि कपी दाडिमे भक्षयिष्यतः ? एवम्, कपी दाडिमे भक्षयिष्यतः।
अपि भ्रमरौ पुष्पे घ्रास्यतः ? एवम्, भ्रमरौ पुष्पे घ्रास्यतः।
अपि बालिके गीते गास्यतः ? एवम्, बालिके गीते गास्यतः।
अपि तौ पुस्तके वाचयिष्यतः ? एवम्, तौ पुस्तके वाचयिष्यतः।
किं नरः शुकशावौ धरिष्यति ? एवम्, नरः शुकशावौ धरिष्यति।
किं अध्यापिका कन्ये पाठयिष्यति ? एवम्, सा कन्ये पाठयिष्यति।
ननु तौ देवौ पूजयिष्यतः ? एवम्, तौ देवौ पूजयिष्यतः।
अपि किंकरः पत्रं नेष्यति ? एवम्, किंकरः पत्रं नेष्यति।
अपि छात्रौ पाठौ पठिष्यतः ? एवम्, छात्रौ पाठौ पठिष्यतः।
अपि माधवः मयूरौ द्रक्ष्यति ? एवम्, माधवः मयूरौ द्रक्ष्यति।
अपि गोपालः गावौ चारयिष्यति ? एवम् ; गोपालः गावौ चारयिष्यति

# बालसुभाषितानि

कण्ठस्था या भवेद्विद्या सा प्रकाश्या सदा बुधैः ।
या गुरौ पुस्तके विद्या तया मूढः प्रतार्यते ।।
शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः ।
बुद्धिप्रारब्धकार्यस्य नास्ति किंचन दुष्करम् ।।
अतिदाक्षिण्ययुक्तानां शंकितानां पदे पदे ।
परापवादभीरूणां दूरतो यान्ति सम्पदः ।।
आदानस्य प्रदानस्य कर्त्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तत्फलम् ।।
आत्मायत्ते गुणग्रामे नैर्गुण्यं वचनीयता ।
दैवायत्तेषु वित्तेषु पुंसां का नाम वाच्यता ।।

# चैत्रस्य दैनन्दिनी

अहं प्रातः ब्राह्मे मुहूर्ते उत्तिष्ठामि। प्रथमं भगवतः विष्णोः चित्रं पश्यामि। पठामि च प्रार्थनाश्लोकम् इमम्—

त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव।
त्वमेव विद्या द्रविणं त्वमेव
त्वमेव सर्वं मम देव देव॥

ततः पितरौ प्रणमामि। पुनः हस्तौ मुखं च प्रक्षाल्य किंचिज् जलं पीत्वा शौचालयं गच्छामि। ततः दन्तधावनं करोमि, अभ्यङ्गं विधाय कदुष्णेन जलेन स्नानं निर्वर्तये। अनन्तरं सन्ध्योपासनं कृत्वा गीतां पठामि। ततः पूर्वं पठितानां विषयाणाम् आवृत्तिं सम्पादयामि, पुनश्च कल्यवर्तं कृत्वा कतिचित् क्षणानि समाचारपत्राणि अवलोकमानः तिष्ठामि। ततः नित्यसम्पातीनि तैल-लवण-इन्धनादिसमानयनानि गृहकार्याणि सम्पादयामि। तदनन्तरं स्निग्धम्, अल्पम्, उष्णं च भोजनं कृत्वा पाठशालां गच्छामि।

अहं सप्तम्यां श्रेण्याम् अधीये, विंशतिः मे सहपाठिनः सन्ति। ते सर्वे अपि स्वभावेन सौम्याः, मम मित्राणि च सन्ति। अस्माकम् अध्यापकाः विद्वांसः कुशलाः विनेतारः प्रियभाषणाः, दयालवश्च सन्ति, पाठयन्ति च अस्मान् सरलेन विधिना शास्त्राणि।

अस्माकं पाठशालायां विभिन्नानां विषयाणां पृथक् पृथक् अध्यापकाः सन्ति । ते वेदान् , व्याकरणम् , काव्यानि, गणितम् भूगोलम् , इतिहासम् , काणादम् , ज्योतिषम् , आयुर्वेदम् , पुराणानि च पाठयन्ति । अस्माकं प्रधानाध्यापकः अध्यापनस्य व्यवस्थां करोति, स्वयम् अपि च पाठयति । होरापञ्चकम् अस्माकम् अध्ययनं प्रचलति ।

समाप्ते च पाठशालायाः समये पुनः वयं गृहान् प्रत्यागच्छामः । तत्र स्वल्पं भुक्त्वा पुनः खेलनाय गच्छामः ।

अहं तु सायं भोजनं कृत्वा प्रत्यहं नियमेन घण्टाद्वयं यावत् अध्ययनं करोमि । तत्र पूर्वपठितानां विषयाणाम् आवृत्तिं कृत्वा नवानां च तेषां पुनः पुनः करोमि चिन्तनम् ।

अहं नियमेन दशवादनसमये शयनागारं गच्छामि, परित्यजामि च शय्यां प्रतिप्रातः पञ्चवादनानन्तरम् । उषसि पठितानां विषयाणां सुचिन्तनेन सुदृढः संजायते स्वाध्यायः, आत्मसात् च भवति समुपचितं शास्त्रज्ञानम् ।

शयीत प्रथमे यामे यावद् घण्टात्रिकद्वयम् ।
चतुर्थान्ते प्रबुद्ध्येत त्रिवर्गफलसिद्धये ॥

# अहर्निशं टंकुरुते घटीयम्

पुरा भारतीयाः वृक्षाणां छायाम् एव अवलोक्य समयस्य विभागम् अकुर्वन् । ततो यष्टिं रोपयित्वा मापयित्वा च तच्छायां समयं निश्चिन्युः । अनन्तरं च आतपघटीनाम् आविष्कारः संजातः । अधुना अपि बहुत्र प्राचीनसंग्रहालयेषु सन्ति ईदृशानि घटीयन्त्राणि ।

वृत्तं विधाय केन्द्रस्थाने एका यष्टिः आरोप्यते यस्याः छाया भास्करस्य गत्या परिधौ लिखितेषु समयसूचकेषु अङ्केषु भ्रमन्ती समयविभागं निर्दिशति । तद् एव एतद् यन्त्रम् अधुनातनस्य घटीयन्त्रस्य मूलम् ।

यन्त्रस्य अस्य पुनः रात्रौ समयनिर्देशे वैयर्थ्यं समीक्ष्य जलघटिकायन्त्रस्य आविष्कारः कृतः दक्षैः । तथाहि– सूक्ष्मछिद्रयुक्तः साङ्कः घटः दोलोपरि स्थाप्यते, बिन्दवः छिद्रमार्गेण अधस्तात् स्थापिते द्वितीये घटे क्षणक्रमेण पतन्तः प्रथमं घटं रिक्तीकृत्य समयम् अङ्केषु निर्दिशन्ति । परम् अत्र अपि, शीतकाले जलं हिमायते इति विप्रतिपत्तिं वारयितुम्, जलस्थाने बालुकां घटे भृत्वा यन्त्राणि व्यरचयन् चतुराः । ईदृशानि यन्त्राणि तु अद्य अपि यत्र तत्र व्यवह्रियमाणानि दृष्टिपथम् आयान्ति ।

सा इयं घटी इदानीं यन्त्रबलेन चलतीति घटीयन्त्रम् उच्यते । यन्त्रम् इदं बहुभिः तारविटपैः निर्मीयते । मुख्यः अस्य विटपः

समानान्तरैः विच्छेदैर्वायुना पूर्यते, तेन तत्रत्यं यन्त्रजालं भ्रमत् तन्नियुक्तानि पर्यन्तदन्तुराणि चक्राणि भ्रामयति। तैः सन्नद्धाः सूचिकाः अपि तेषां गत्या शनैः शनैः भ्रमन्ति, निर्दिशन्ति च घटी मुखे समयाभिज्ञानानि अंकानि।

घटीयन्त्राणां बहवः भेदाः भवन्ति। स्वीजरलैण्डे अमेरिकायां च उत्तमजातीनि तानि विरच्यन्ते। जापानलोकाः शार्मण्या अपि नातिमहार्घाणि सुदृढानि सुन्दराणि च घटीयन्त्राणि विक्रीणन्ते।

अस्मिन् चित्रे घटीयन्त्रस्य परिधिद्वयं पश्यत। उभयत्र अपि गणनांकाः निवेशिताः सन्ति। एकत्र एकतः द्वादशान्तम् अन्यत्र च दशकक्रमेण षष्टिं यावत्। महति परिधौ षष्टिः नीलीचिह्नानि वर्तन्ते, लघुपरिधौ च द्वादश एव सन्ति तानि। एतानि क्रमेण लिप्तिकाः (Minutes) घण्टाः (Hours) च प्रदिशन्ति। अस्यां घटिकायाम् अन्यानि अपि त्रीणि मेचकवस्तूनि जङ्गमानि इव सन्ति तानि सूचिकाः इति आहुः। या तु



लघ्वी सूची लघुपरिधौ रेखासु समन्ततः धावते, सा प्रतिलिप्तिका-( Seconds ) प्रदेशिनी कथ्यते। या च आयता सूचिका दीर्घे परिधौ शनैः शनैः व्यवस्थितया मुद्रया संचरते सा लिप्तिका

निर्दिशति । अपरा च या सुस्थिरा इव प्रतिभाति सा घण्टा-प्रदेशिनी सूची कथ्यते ।

इदानीम् ईदृशानि अपि सन्ति घटीयन्त्राणि, यैः देशान्तरीयोऽपि कालविभागः साङ्गोपाङ्गं व्याख्यायते । तेषु लिप्तिकाः घण्टाः, दिनानि, वाराः, तिथयः, मासाः, संवत्सराणि च पृथक् पृथक् निर्दिश्यन्ते ।

प्रतिदिनं द्वादश घण्टा वाद्यन्ते, अहोरात्रे तु चतुर्विंशतिः । एकस्यां लिप्तिकायां षष्टिः प्रतिलिप्तिका भवन्ति । लिप्तिकानां षष्ट्या एका घण्टा भवति, ताभिः तिसृभिः यामः, अष्टाभिः यामैः, अहोरात्रः, अहर्गणैः मासाः भवन्ति, तैः वर्षाणि, तैः च युगानि ।

इयं घटिका 'गतः समयः पुनर्न निवर्तते' इति महार्घः स वृथा न यापनीयः इति रात्रिंदिवा उच्चैः ध्वनन्ती बोधयति—

अलभ्यं यदायुःपलं स्वर्णभारादहो ! तस्य दण्डो वृथा याति यामः ।
दिवा च त्रियामा प्रसादान्नराणामितीवानिशं बोधयन्ती घटीयम् ॥

प्रातः षड्वादनसमये पूर्वस्यां भानुः उदयति, जायते च दिनम् । दशवादनवेलायां विद्यार्थिनः पाठशालां प्रयान्ति । सायं षड्वादनसमये पश्चिमायाम् अस्तमेति भास्करः ।

माधवः घटीं रक्षति । एष अनायासेन समयविभागं जानाति । अतः अयं यथासमयं स्वकार्याणि निर्वर्तयति, न क्षणमपि वृथा यापयति बहुमूल्यस्य समयस्य । समयेन स्वपतां जाग्रतां च अघः याति, भाग्यं वर्धते, बुद्धिः समेधते, नीरोगता च जायते ।

महोपयोगि यन्त्रम् इदम्। युष्माभिः अपि घटी रक्षणीया। इयं नियमानुसरणं सामयिकतां च निगमयति। ये च बहुव्यतिकरे अस्मिन् संसारे साफल्यस्य निदाने स्तः। छात्राणाम्, अध्यापकानां विदुषां च घटीम् अन्तरा न चलति कार्यम्। एषा टंकुरुते-

बाल्यं गतं यौवनमप्यतीतमतः समायास्यति वृद्धता च।
आयुर्गतं प्रायमिदं वृथेत्थमहर्निशं टंकुरुते घटीयम्॥

# स्वभावः

शोभनो भावः प्रकृतिः स्वभावः, सद्वृत्तिरित्यर्थः। सद्वृत्तीनामसद्वृत्तीनां च समवायः खल्विह जीवनमस्माकम्। सद्वृत्तयो जनाः सज्जना भवन्ति, अन्ये तु दुर्वृत्ता दुर्जना वा कथ्यन्ते। अभ्यासस्तु पौनः पुन्यकः स्वभावाय प्रकल्पते। यस्तु कश्चिन्नियमेन ब्राह्मे मुहूर्ते शय्यापरित्यागमभ्यस्यति स तु विलम्बेनापि सुप्तो नियमिते क्षणे निद्रां परित्यजत्येव। एवमन्यत्रापि सदाभ्यासः स्वभावं निर्मातुं शक्नोति। दृश्यते खल्वेकः पठनसदाभ्यासेन पौनः पुन्येन संजातस्वाध्यायव्यसनः अन्यस्तु नित्यं कलानुरागव्यसनी, अपरस्तु दैनन्दिनेन दुर्वृत्तानां समागमेन भङ्गायां मद्येषु द्यूतेषु वा प्रवर्तमानः प्रणाशोन्मुखः पराधीनो व्यसनानाम्, इति सावधानतया स्वभावनिर्माणं विधेयम्। यतश्च—

स्वभावा हि परीक्ष्यन्ते सर्वस्य नेतरे गुणाः।
अतीत्य हि गुणान् सर्वान् स्वभावो मूर्ध्नि वर्तते॥

स्वभावो दुःस्वभावो वा देहिनां प्रथमं शनैः शनैः प्रसरन्नावबुध्यते, बद्धमूलस्तु बहुना प्रयासेनापि न शक्यते हातुमिति स्मारं स्मारं व्यसनानां प्रकृतीनां दुःस्वभावानां वा न पराधीनेन भाव्यं सुधिया। साधितास्तु सत्स्वभावा एव भद्राय भवन्ति परे तु पुनः प्रणाशाय।

केचित्तु प्रकृतिमेव स्वभावमामनन्ति सुधियः। तेनैव जलस्य शैत्यम्, अग्नेरौष्ण्यम्। दुग्धे माधुर्यम्, इन्दोराह्लादकत्वम्, भानोर्भासुरत्वम् भूमेरुर्वरात्वम्, पवनस्य च पावकत्वं परिदृश्यन्ते। जगत्यामिह प्रकृति-भेदात्स्वभाववैचित्र्यम्, तेन गवां सारल्यम्, गजानामुदात्तत्वम्, तुरंगमानां तारल्यम्, महिषाणां मान्द्यम्, वानराणां चापल्यम्, सरघाणां संग्राहकत्वम्, व्याघ्राणां भयावहत्वम्, सिंहानां शौर्यम्, कोकिलानां स्वरमाधुर्यम्, काकानां कण्ठकार्कश्यम्, सुमनसां सौमनस्यम्, इक्षौ-माधुर्यम्, निम्बे कटुता, दुर्जनेषु दौर्जन्यम्, सज्जनेषु सौजन्यं च। अत एवोक्तम्—

न धर्मशास्त्रं पठतीति कारणं न चापिवेदाध्ययनं दुरात्मनः।
स्वभाव एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः॥

सुकृताभ्यासः सज्जनस्तु सदैव लोकोत्तरवृत्तिः प्रवर्तते। अयं नियमेन वदति, न्याय्यमाचरति, व्यजनमिव भ्रमन् निवारयितुं चेष्टते परपरितापान्, अनुगृह्णाति रिपूनपि, उपकरोति लोकम्, साधयत्यन्येषां कार्याणि, क्षमतेऽपराधिनः, दयां करोति भूतेषु, न चापकुरुते कस्यापि। न विमुखान् करोति फलद्रुम इव लोष्टप्रक्षेपकानपि प्रसारितकरान्, चन्दनद्रुम इव पुष्णाति खलभुजङ्गमानपि, चन्द्रमा इव समाह्लादयति

विश्रम् , समुद्र इव गोत्रस्थितिं न परित्यजति, घन इवार्द्रहृदयः परस्मै ददाति जीवनम् , कोकिल इव वर्णयति परगुणसहकारसौरभम् , कर्पूर इव सुरभीयति, पुष्प इव सुगन्धीयति, न प्रत्युपकारमपेक्षते, सगुणोऽपि निर्गुणायते, आपत्स्वप्यगुरुरिव गुणगन्धं न जहाति, गङ्गेव पापम् , शशीव तापम् , कल्पतरुरिव दैन्यं च दूरीकरोति जीवानाम् । सज्जना हि—

धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः ।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥

दुःस्वभावस्तु पुनः पश्यति परेषां छिद्राणि । अयं बहुधा निष्कपटद्रोही बहुधान्योपघातको रन्ध्रानुगो मूषक इव भीषको जनानाम् । स्वभावकठिनस्य कृत्रिमां नतिं बिभ्रतोऽस्य गुणोऽपि चापस्येव परप्राणप्रणाशाय प्रकल्पते । श्लेष्मेव मधुरैः कोपमायात्ययम् , कटुकैश्च प्रशाम्यति । अभुजंगमोऽप्युल्वणं विषमुद्गिरति, भीषणं भाषते, दूषणं दधाति, गुणान् निवारयति, परापकारेषु जागर्ति, परहानौ च प्रमोदते पापप्रकृतिः ।

अयं तु परपैशुन्ये सर्वतोऽक्षिशिरोमुखः ।
सर्वतः श्रुतिमाँल्लोके सर्वमावृत्य तिष्ठति ॥

प्राचीनभारते सुस्वभावनिर्माणं शिक्षायाः समानाङ्गं बभूव । गुरुकुलेषु ब्रह्मचारिणः साकल्येन लोकव्यवहारानधीयुः ।

इदानीन्तनीष्वपि कासुचित् पाठशालासु धर्मशिक्षा दीयते, अभ्यस्यन्ति च छात्राः शैशवादेव तत्र तत्र स्वभावनिर्माणम् । स्वभावस्तु एकदा निर्मितः सदातनः संजायते देहिनाम् । अत्रोच्यते—

उपाधिभिः संततसंगतोऽपि
नहि स्वभावं विजहाति भावः ।
आजन्म उन्मज्जति दुग्धसिन्धौ
तथापि काकः किल कृष्ण एव ।।

तस्मात् स्वभावसाधने सावधानैर्भाव्यमस्माभिः । अन्यच्च—

यः स्वभावो हि यस्यास्ति स तस्मिन् व्याप्य तिष्ठति ।
प्रसरन् बद्धमूलस्तु वज्रकल्पायते पुनः ।।

## प्रहेलिके

भोजनान्ते च किं पेयम् ? जयन्तः कस्य वै सुतः ? ।
कथं विष्णुपदं प्रोक्तम् ? तक्रं शक्रस्य दुर्लभम् ।। १ ।।

का पाण्डुपत्नी ? गृहभूषणं किम् ?
को रामशत्रुः ? किमगस्ति जन्म ?
कः सूर्यपुत्रो ? जानन्ति सन्तः,
कुन्ती सुतो रावणकुम्भकर्णः ।। २ ।।

१ चतुर्थे क्रमेण उत्तरम् । २ चतुर्थे चरणे सर्वप्रश्नानामुत्तरम् ।

# हिमालयः

हिमालयः पर्वतानां राजा कथ्यते। अयं सर्वेभ्यः पर्वतेभ्यः उच्चतमः। एष भारतस्य उत्तरस्यां दिशि अवतिष्ठते। अयं हिमस्य आलयः, एष औषधीनां निधानम्, वनेचराणाम् आश्रयः, मृगेन्द्राणां जन्मभूमिः, देवानां विहारस्थलम्, प्रदर्शनाधिष्ठानं वन्यवृक्षाणाम्, आकरश्च रत्नानाम्। जलधरा अस्य महोत्तुङ्गानि शृङ्गाणि संघट्टयन्ते समाश्रयन्ते च नित्यम्। अस्य उपत्यकासु शश-मृग-वृक-शिवा-शृगाल शार्दूल-महिष-गण्डक-भल्लूक-सल्लक-गवय-चामर-पञ्चाननाःस्वैरं विचरन्ति वन्यपशवः, गुहासु निवसन्ति तपस्विनः, विलसन्ति च उपवनेषु निवहाः खगानाम्। जनाः सुदूरात् अस्य दर्शनार्थम् आयान्ति। अस्य उदग्रशिखरारूढैः अधःस्थितानि महाक्षेत्राणि केदाराणि इव, भवनानि क्रीडनकानि इव, मनुष्याः बालका इव, बालकाः शालभञ्जिका इव, नद्यः सरीसृपा इव, समुद्राःतडागा इव, तडागाश्च पल्वला इव प्रतीयन्ते।

साहसिकाः युवानः संघान् विधाय अस्य उदग्राणि शिखराणि समारोहन्ति। पाश्चात्याः यात्रिणः अस्य महोतुङ्गानि शिखराणि समारोढुं सुतरां प्रयतन्ते। वर्षं वर्षम् एतेषां संघाः एनं गिरिराजम् आरोहन्ति। हिमवतः आरोहणं न कश्चिद् बालानां विलासः, अपि तु शौर्यस्य निकषपाषाणम्। तत्र हिमः वर्षति, हिमच्छिते मार्गे न मिलति पदपद्धतिः, जडीकरोति हिमानीशीतं यात्रिभिः हसन्तीषु नीयमानम् अनलमपि। शरांसि इव छिनत्ति देहं हिमशीतलः पवनः। नालं भवन्ति साधनानि, व्यर्थीभवन्ति च सहाया हिमवतः आरोहणयात्रायाम्। कदाचित्

सहसा हिमानी पादतलात् अधस्ताद् प्रसर्पति, आरोहकश्च क्रोशान् निम्नासु अद्रिद्रोणीसु परिपतन् हिमराशौ निलीयते। यदि कश्चिद् अवश्यायविष्पग्रे पथि स्खलति, स तु त्वरितमेव निम्नं प्रयाति नश्यति च तत्क्षणादेव।

महोच्छ्रितानि अस्य शृङ्गाणि सदैव हिमेन आच्छादितानि भवन्ति। नाङ्गपर्वतः, नन्दादेवी केदारनाथः, गङ्गोत्री, यमुनोत्री, काञ्चनजंघा च इत्यादीनि अस्य अन्यानि अपि उन्नतानि सन्ति शिखराणि। केदारनाथः, मानसरोवरः, कैलाशश्च इत्यादीनि हिमालयस्य वक्षसि तीर्थस्थानानि सन्ति। गौरीशंकरं नाम हिमवतः शिखरं सर्वोच्चतमम्, अस्य उच्छ्रायः षट्क्रोशार्धपरिमितं वर्तते।

हिमालयः खलु नदीनां प्रभवः। अस्मात् गङ्गा यमुना ब्रह्मपुत्रा अन्या अपि च नद्यः प्रभवन्ति। अस्य अधित्यकायां मानसे नाम्नि सरसि हंसाः निवसन्ति। अस्य तटात् नातिदूरे एव स्थितेषु प्राचीनबौद्धमन्दिरेषु दीर्घायुषः मुनयः निवसन्ति, ये केवलं जलाहारं पवनाहारं फलाहारं वा विधाय ईश्वरं भजन्ते।

कविकुलगुरुः कालिदासः हिमालयस्य अधिष्ठातृदेवं हिमाचलं निरूपयामास। स हिमाचलस्य पत्नीं मेनां वर्णयामास। पार्वती हिमाचलस्य पुत्री अभवत्। या तु अधुनातनेऽपि, लोके-शिवा भवानी रुद्राणी मृडानी चण्डिकाम्बिका इत्यादिभिः नामभिः कथ्यते पूज्यते च जनैः। पर्वतराजस्य पुत्री सा पार्वती देवदेवस्य महादेवस्य पाणिं जग्राह। तयोः पुत्रौ श्रीगणेशस्कन्दौ अद्यापि लोकेषु पूजाम् अर्हतः।

हिमालयं भारतमातुः हैमं मुकुटं प्रणिगदन्ति जनाः। अयं पुरा भारतस्य प्राकाराय अकल्पत। न एनम् उल्लंघ्य वैदेशिकाः भारते प्रवेशं पारयामासुः। इदानीं तु व्योमयानस्य आविष्कारेण भग्न इव व्यर्थ इव पुरातन इव च भाति भारतस्य अयं महाप्राकारः। तथापि हिमगिरिः अयं देशस्य बहून् उपकारान् करोति। अस्य नदीनां जलैः

अस्माकं क्षेत्राणि सिच्यन्ते, एष भुवननिर्माणयोग्यं परमोत्तमजातीयं काष्ठं उत्पादयति खनिभ्यः लौहम्, सुवर्णम्, रजतम्, अभ्रकम्, अन्यानि च खनिजानि उत्पाद्य प्रयच्छति। एष फलानि औषधानि पशुजातानि च बहूनि वस्तूनि ददाति। अस्य एव आकरेभ्यः हीरकादीनि महारत्नानि समुद्भवन्ति, इति एनम् अनेकरत्नप्रभवं कथयन्ति कवयः। यथाह महाकविकालिदासः—

अनेकरत्नप्रभवस्य तस्य
हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥

---

## संस्कृतव्याहारः

पुस्तकेऽस्मिन् सन्धिवर्जितवाक्येषु सरलानि संभाषणानि सन्ति। विभक्तीनाम्, कारकाणाम्, भूतभविष्यद्वर्तमानाज्ञाविध्यर्थानां क्रियापदानां च तथा सन्निवेशोऽस्ति यथा छात्रा अनायासेनैवार्थं गृह्णीयुः। परिशिष्टे संस्कृतवर्णमाला, सन्धिनियमाः, कतिपयधातूनां शब्दानां च रूपाणि मनोविज्ञानपूर्वकं दत्तानि सन्ति। बहुषु विद्यालयेषु पाठ्यत्वेन स्वीकृतमिदम्। अस्य लेखको वैद्य. रामस्वरूपशास्त्री
मूल्यं दशाणकाः। प्राप्तिस्थानम्—

वै. रामस्वरूपशास्त्री
लालबावा मन्दिर, भोलेश्वर,
बम्बई नं. २.

# संस्कृतपठनपाठनरीतिः

(ले० रामस्वरूपः शास्त्री 'अमरः' तालबेहटस्थः)

संस्कृतभाषाया अवनतेः कारणमस्ति राज्यप्रोत्साहनाभावः। यथा देववाणी शतशः प्रपीडिता तथा यदि काचिद् अन्या भाषा राज्येन प्रपीडिताऽवमानिता वा स्यात्सा स्वल्पेनैव कालेन विनष्टा स्यात्। अस्तु, अस्माकमपि कर्त्तव्यमिदमस्ति यदस्या भाषायाः प्रचाराय सम्यग्रूपेण पाठनाय च बद्धपरिकरा भवेम। पाठनार्थं तावत् प्रथमं बालकेभ्यः संस्कृतशब्दानां तादृग् ज्ञानं देयं येन ते सारल्येन रटनं विना शब्दान् तान् जानीयुः। यथा अश्वस्य स्थाने घोटकः, गजस्य स्थाने हस्ती नीरस्य स्थाने जलम्। तथैव धातूनां ज्ञानं प्रचलितस्वकीयभाषाक्रियासमानैर्धातुभिः प्रदेयम्। यथा लगति, पठति, मिलति, हसति पिबति, खादति, चलति, चरति, रोदिति, इत्यादिधातुज्ञानकरणेन ते संस्कृतभाषां सरलां मन्येरन्। शब्दधातुपूरकक्रियाणां च ज्ञानं स्वस्य भाषया प्रथमं कार्यम्। ततः संस्कृतभाषाया ज्ञानं विधेयम्। प्रथमतोऽनुवादस्ततः संस्कृतभाषणे संजातयोग्यतासु बालकबालिकासु व्याकरणसाहित्यादिविषयस्य पाठनं सुखावहं कृत्वा मनोभावपरिवर्तनाय प्रशंसनीयं स्यात्। बालकानां चित्तेभ्यः संस्कृतकठिनताभीतिःसंस्कृतस्य पठनपाठनक्रियया सरलतया दूरीकरणीया तदैव सुरगिरां समुन्नतिर्भविता नान्यथेति।

# लोकोक्तयः

अतिरेकः सौभाग्यानामनर्थाय प्रकल्पते ।

Too much good luck is an ill luck.

न संशयमनारुह्य नरो भद्राणि पश्यति ।

Nothing venture, nothing win.

नहि कस्तूरिकामोदः शपथेन विभाव्यते ।

Virtues cannot be conceled by force.

संदिग्धमल्पं च जीवनम् ।

Life is short and uncertain.

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।

Hurry makes bed curry.

विद्वत्सु ज्ञानं वयसा गुरूयते ।

An old age is the mother of knowledge.

एकाकिनापि दोषेण बाध्यन्ते बहवो गुणाः ।

One cloud is enough to eclipse all the sun.

पणशः कणशश्चैव धनानि परिचिन्तयेत् ।

Take care of pence and the pounds will care of themselves.

गर्जनं न वरं भूरि वर्षणं चापल्यमप्यलम् ।

Doing is better than sayjng.

कार्यं कुर्याद् यथाशक्ति प्रयतेत यथाबलम् ।

Cut your coat according to your cloth.

गुरुतामन्यभारस्य न जानन्ति जनाः परे ।

No one knows the weight of another.

# विशुद्धं पुराणं च ताम्रभस्म

अयि ! प्राणाचार्याः, वैद्यविद्वन्मणयः ! जानन्त्येव तावद् भवन्तोऽल्पमात्रया-विशेषगुणकरत्वाच्चिरस्थायित्वाद्, क्षिप्रमारोग्यदायित्वाच्चापि पुराणानां धातूपधातु-भस्मरसोपरसप्रयोगाणां काष्ठौषधप्रयोगेभ्यो वैशिष्ट्यम् । यथोक्तम्—

अल्पमात्रोपयोगित्वादरुचेरप्रसङ्गतः ।
क्षिप्रमारोग्यदायित्वादौषधेभ्योऽधिको रसः ॥

रसशास्त्रे ताम्रभस्मनः प्राधान्यम् । सर्वेषु प्रधानरसेषु ताम्रस्य वर्तते एव पाठः । इदानीं तु बहव आयुर्वेदचिकित्सकाः परकीयासु रसायनशालासु विशुद्धं ताम्रभस्म दुर्लभम्, स्वयं निर्मातुं समयाभावश्चेति कृत्वा सताम्राणां चमत्कारिरसप्रयोगाणामप्युपयोगं वर्जयन्तो स्वकीयामायुर्वेदपद्धतेश्चापि परमां हानिं सहन्ते इत्यत्र ताम्रस्य विषवत्ता हि परमं भयमिति जानीमहे । तथाहि—

न विषं विषमित्याहुस्ताम्रं तु विषमुच्यते ।
एको दोषो विषे ताम्रे त्वष्टौ दोषाः प्रकीर्तिताः ॥

ताम्रदोषास्तु----

भ्रमो मूर्च्छा विदाहश्च स्वेदक्लेदनवान्तयः ।
अरुचिश्चित्तसंताप एते दोषा विषोपमाः ॥

तस्मात्संशोधयेत्ताम्रमिति विशुद्धमेव ताम्रं प्रयोगयोग्यम् । इदानीं तु न भेत्तव्यम् । अस्माकमौषधालये गुरुपरंपरया प्राप्तेन शास्त्रविधिना प्रस्तुतं विशुद्धं जीर्णं निर्दोषं प्रोक्त-गुणं च ताम्रभस्म वैद्यबन्धूनामुपयोगाय वर्तते । भवन्तोऽस्योपयोगेन लाभं लभेरन्निति प्रार्थयामहे वयम् । तोलकस्य मूल्यं पञ्चरूप्यकम् ।

ताम्रभस्मगुणाः----

ताम्रं शीतं निहन्याद् व्रणकृमिजठरानाहसंप्लीहपाण्डु-
श्वासश्लेष्मास्रवातक्षयपवनगदं शूलयुग्मं च गुल्मम् ।
कुष्ठान्यष्टादशापि स्मरबलरुचिकृद्रक्तमेदोम्लपित्त-
च्छेदि प्रोक्तं त्वशुद्धं कृमिमुदरगदाध्मानकुष्ठादि कुर्यात् ॥

# बालसंस्कृतम्

आपको हठात् संस्कृतानुरागी बनायेगा।

आपके बालक और बालिकाओं को संकृत सिखायेगा।

आपकी निजी संस्कृति आर सभ्यता को सामने रक्खेगा

आपके धर्मग्रन्थों के पढने और समझने में सहायक होगा।

आपकी राष्ट्रभाषा को समृद्ध बनाने में तत्पर रहेगा।

आपको अच्छा साहित्यक बनाने में प्रयोजक होगा।।

आपकी आस्तिकता को दृढ बनाने में हेतु होगा।

आपके धर्म का यथार्थ अनुमोदन करेगा।

आपके व्यवहारज्ञान की वृद्धि में सहायक होगा।

आपके बालकों को सुबोध और सुज्ञ बनायेगा।

आपके साहित्यकविनोद का उपकरण होगा।

आपके लेखों और कविताओं का प्रकाशक होगा।

आपके द्विजत्व का प्रत्यक्ष साक्षी होगा।

आपके भारतीयत्व का पुष्ट प्रमाण होगा।

आपको संस्कृत की सरलता और भद्रता का परिचय देगा।

आपके कठिन विषयों को सरल रूप में उपस्थित करेगा।

आपकी उन कठिनाइयों को दूर करेगा जो कि प्रारंभिक संस्कृत छात्रों को उपस्थित होती हैं।

अतएव आज ही ग्राहकसंख्या में अपना नाम लिखाकर **"बालसंस्कृतम्"** के पढने पढाने का लाभ लीजिए।

बालसंस्कृतम् के ग्राहकों को सप्तम अंक के साथ **"संभाषा"** नामक पुस्तक का पहिला भाग लागत मात्र मूल्य में प्राप्त होगा। यह पुस्तक बालकों को शीघ्र ही संस्कृत बोलना सिखाती है। दूसरी बार छप रही है। ५ प्रति वी. पी. से भेजी जाएंगी। एक प्रति के लिए ११ आने का टिकट भेज दें।

संपादकः